# जागरूको भव




संस्कृत भारती
बेङ्गलूरु

प्रकाशनम् -
**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथममुद्रणम् - १९९३ - ५०००
द्वितीयमुद्रणम् - १९९९ - ५,०००

मूल्यं - रू. ३.००

**मुद्रणम् -**
स्प्यान् प्रिण्ट्
बसवनगुडि, बेङ्गलूरु - ४

**JAGAROOKOO BHAVA** - A street play in simple Samskrit.
Publisher - **Samskrita Bharati** 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085.

Pages - iii + 17 Price - Rs. 3-00 Second Print - April 1998
Printed at - **Span Print,** Basavanagudi, Bangalore - 4

# प्रास्ताविकं किञ्चित्

## (प्रथममुद्रणस्य)

हिन्दुसेवाप्रतिष्ठानेन यदा संस्कृतप्रचारकार्यम् आरब्धं तदा चिन्तितं यत् साहित्यस्य विविधाः प्रकाराः अपि संस्कृतेन प्रकटिताः भवेयुः इति । तदा आधुनिक-प्रचारतन्त्रेषु प्रमुखस्य वीथीनाटकस्य उपरि अपि अस्माकं दृष्टिः पतिता ।

एतत् वीथीनाटकं भारतीयविज्ञानसंस्थायाः संस्कृतसङ्घस्य कार्यकर्तृभिः १९८३ तमे वर्षे प्रशिक्षणवर्गसन्दर्भे शृङ्गगिर्याम् ऐदम्प्राथम्येन अभिनीतम् । ततः विविधेषु सन्दर्भेषु एतस्य शताधिकप्रयोगाः जाताः । सर्वत्र एतत् नाटकं जनप्रियं जातम् ।

एतस्य वीथीनाटकस्य कल्पनाकारकम्, ऐतदम्प्राथम्येन तस्याः कल्पनायाः साकरतां कल्पितवन्तं च भारतीयविज्ञानसंस्थायाः संस्कृतसङ्घगणम् एतत्सन्दर्भे कृतज्ञतापूर्वकं स्मरामः । मुद्रणकारं तत्सहकारिगणं चापिप कृतज्ञतापूर्वकं स्मरामः ।

श्रीमुखं सं।। निजभाद्रपदपूर्णिमा — प्रकाशकः

३०.९.१९९३

## (द्वितीयमुद्रणस्य)

वीथीनाटकम् एतत् बहुत्र अभिनीतम् । संस्कृतानभिज्ञः अपि एतत् दृष्ट्वा अर्थम् अवगच्छति स्म । एवं संस्कृतप्रचारे बहूपकारकम् एतत् इदानीं द्वितीयमुद्रणं प्राप्नुवत् अस्ति यत् तत् तु महते सन्तोषाय । सहकृतवद्भ्यः सर्वेभ्यः कृतज्ञताः समर्प्यन्ते ।

बहुधान्य सं।। चैत्रशुक्लसप्तमी — प्रकाशकः

३.४.१९९८

# जागरूको भव

*(वीथीनाटकम्)*

- १ -

नाटककारः - आगच्छतु, आगच्छन्तु । वीथीनाटकम् आगच्छन्तु ।

(कोलाहलः)

लौकिकः - (मध्ये आगत्य) *किं भोः, कः एषः भवतां कोलाहलः ? उच्चस्वरेण किं वदन्तः सन्ति भवन्तः ?

नाटककारः - आगच्छन्तु, आगच्छन्तु, संस्कृतेन वीथीनाटकम् अस्ति। सर्वे आगच्छन्तु ।

लौकिकः - किम् ? वीथीनाटकं वा ? तदपि संस्कृतेन ? गच्छतु रे, संस्कृतनाटकं को वा ज्ञातुं शक्नुयात् ?

नाटककारः - तथा नास्ति भोः । नाटकं सरलभाषया भवति । सर्वेणाम् अर्थबोधः भवति । भवान् अपि आगच्छतु ।

लौकिकः - एवं वा ? अस्तु तर्हि । अहमपि आगच्छामि । गच्छाम तावत् । (जनान् उद्दिश्य) पश्यन्तु भोः, संस्कृतेन एते नाटकम् अभिनयन्ति इति श्रूयते । सरलतया सर्वेषां बोधः यथा स्यात् तथा अभिनयन्ति इति श्रूयते । पश्याम तावत् ।

नाटककारः - आगच्छन्तु ...... आगच्छन्तु ......

* * *

- २ -

(रायः आगच्छति ।) (नटनायकः गीतं गापयति । सर्वे नटाः गीतं गायन्ति । तदनुगुणं रायः अभिनयति ।)

गीतम् - रायः गृहमागतः । अहो श्रान्तः ! अहो श्रान्तः !

---

* लौकिकः प्रादेशिकभाषया एतम् अभिप्रायं प्रकटयेत् ।

कार्यमहो कार्यं कार्यालये,
वेतनमल्पम्, आयः न्यूनम्,
कुटुम्बभरणं बहुकष्टं,
दिनमनुदिनमपि वर्धते मूल्यं,
पत्नीपुत्राः इच्छन्ति बहु बहु,
तण्डुलमानय, शाकम् आनय,
तैलम् आनय क्षीरम् आनय,
पुस्तकमानय लेखनीमानय,
अत्यावश्यकवस्तूनि आनय,
वराकः एषः कुप्यति, खिद्यते,
पुनरपि क्रुध्यति, अन्ते रोदिति,
कष्टमहो कष्टम्
जीवनयात्रा बहु कष्टम्
कष्टम् अकटकटा ऽऽ कष्टम् अकटकटा ऽऽ

रायः - नलिनि ! नलिनि ! (द्वारशब्दं करोति ।) (द्वारोद्घाटनस्य अभिनयः)

गिरीशः - अहो, पितः ! आगच्छतु ।

रायः - गिरीश ! भवतः माता कुत्र गतवती ?

गिरीशः - कुत्रापि संस्कृतनाटकम् अस्ति इति गतवती ।

रायः - कदा आगच्छति सा ?

गिरीशः - अहं किं जानामि ?

रायः - अस्तु, गिरीश, बुभुक्षा भवति । पाकशालायां किम् अस्ति इति पश्यतु । किञ्चित् काफी करोतु ।

गिरीशः - अस्तु, पश्यामि । (अन्तः गत्वा आगत्य) पितः! एतत् स्वीकरोतु । (काफी-चषकं ददाति ।)

रायः - (पीत्वा) किमिदं काफी वा ? उष्णजलं वा ?

गिरीशः - अहं किं करोमि ? गृहे शर्करा नास्ति। काफीचूर्णं नास्ति। क्षीरमपि नास्ति। कथं काफी करोमि ?

रायः - प्रतिदिनम् एवमेव। सर्वदा नास्ति ... नास्ति ... नास्ति ... नास्ति।

गिरीशः - यदि भवान् यथेष्टम् आनयति तर्हि नास्ति इति किमर्थं वदामः ?

रायः - अस्तु, किं किं नास्ति इति वदतु। सर्वम् आनयामि।

गिरीशः - शृणोतु, शर्करा नास्ति, गुडः नास्ति, तण्डुलः नास्ति, तैलं नास्ति, दालः नास्ति, शाकः नास्ति, मृत्तैलं नास्ति .....

रायः - अये, अलम् इतोऽपि अधिककथनेन। (शिरेवेदनाम् अभिनयन्) तर्हि किम् अस्ति ?तद् वदतु।

गिरीशः - अहम् एकः अस्मि। भवान् एकः अस्ति, तावदेव।

रायः - हूँ, (खेदम् अनुभूय) अस्तु, स्यूतम् आनयतु। सर्वाणि वस्तूनि आनयामि। (गिरीशः स्यूतम् आनीय ददाति)

गिरीश ! एकः विषयः। अद्य भवतः सन्दर्शनम् आसीत् किल ? किं जातम् ?

गिरीशः - तत् किं भवति ? यः धनं ददाति सः उद्योगं प्राप्नोति। यस्य 'इन्फ्लुयेन्स्' अस्ति सः अपि उद्योगं प्राप्नोति।

रायः - तर्हि भवान् एवं करोतु। देवीप्रसादः इति एकः मम स्नेहितः अस्ति। सः राजकीये व्यवहारे अतीव निपुणः अस्ति। प्रभावी पुरुषः च। भवान् तं पश्यतु, मम नाम वदतु। उद्योगः लभ्यते एव।

गिरीशः - अस्तु, इदानीमेव गच्छामि।

रायः - अहम् आपणं गच्छामि।

* * *

(मार्गः - रायः गच्छन् अस्ति। मित्रं रमेशः अभिमुखम् आगच्छति।)

रायः - हरिः ओं, रमेश!

रमेशः - हरिः ओं! किं भोः, दर्शनमेव नास्ति?

रायः - अहम् अन्यत्र गतवान् आसम्। सर्वं कुशलं वा? (अग्रे दृष्ट्वा) आगच्छतु भोः। अत्रैव उपाहारमन्दिरम् अस्ति। काफी पिबाम।

(उपाहारमन्दिरप्रवेशम् अभिनीय आसने उपविश्य)

रमेशः - अयेऽऽ कः अस्ति?

वितारकः - किम् आवश्यकम्?

रमेशः - किं किम् अस्ति?

वितारकः - इड्ली, क्वथितं, पृथुकाः, उपमा, बन्स्, पूरिका, वडा, केसरीबात् ......

रमेशः - किमपि मास्तु। अर्धार्धं काफी ददातु।

वितारकः - (स्वगतं) वराकाः! सर्वं पृच्छन्ति। अनन्तरम् अर्धार्धं काफी इति वदन्ति। (अन्तर्भागम् अभिलक्ष्य उच्चस्वरेण) अर्धार्धं काफी ..... (काफी आनीय स्थापयति।)

रायः - किं भोः, अत्र आगच्छतु।

वितरकः - किम्?

रायः - एतत् किम्?

वितारकः - चषकः।

रायः - चषके किम् अस्ति?

वितारकः - चषके काफी अस्ति।

रमेशः - (कोपेन) काफीमध्ये किम् अस्ति?

वितारकः - अहो, मक्षिका वा ? तत्र किमस्ति ? बहिः क्षिपतु। पिबतु।

रायः - तथा कर्तुं न शक्यते। अन्यत् ददातु।

वितारकः - तर्हि अहम् एव मक्षिकाम् उन्नीय क्षिपामि। (तथा करोति) इदानीं पिबतु।

रायः - रे, अन्यत् आनीय ददातु। कीदृशम् उपाहारमन्दिरं भवताम् ? काफीमध्ये अपि मक्षिकाः।

वितारकः - (जनान् उद्दिश्य) पश्यन्तु भोः, एकरूप्यकात्मके काफीपानीये, ऋते मक्षिकायाः, किं गजम् आनीय स्थापयेम वा ? (स्वगतम्) हुं, वराकाः !!

रायः - किं रे, भवान् अन्यत् काफी आनीय ददाति वा न वा ?

वितारकः - अन्यत् दातुं न शक्यते। आवश्यकं चेत् एतत् पिबतु, नो चेत् गच्छतु।

रायः - एवं वा ? तर्हि अहं स्वास्थ्यविभागाधिकारिणः (Health Officer) समीपं गत्वा वदिष्यामि।

वितारकः - वदतु रे, किं तेन ? सः आगत्य किं वा कुर्यात् ? यदा सः आगच्छति तदा मसालादोसां स्पेषल् काफी च दद्मः चेत् स्वीकृत्य मौनं गच्छति। स्वास्थविभागाधिकारिणः समीपं किं, स्वास्थ्यसचिवस्य समीपं गच्छतु। किं तेन अस्माकम् ?

रायः - (क्रोधेन) अस्तु, वयम् अपि पश्याम तावत्। (मित्रेण सह निर्गच्छति)

* * *

– ४ –

(आसन्दे देवीप्रसादः उपविष्टः अस्ति। गिरीशः प्रविशति।)

गिरीशः - हरिः ओं, नमस्कारः।

देवीप्रसादः - कः भवान् ?

गिरीशः - अहं भवतः मित्रस्य पुत्रः ।

देवीप्रसादः - इदानीम् अहं सचिवस्य साहाय्यकः अस्मि । अतः सर्वे 'भवतः मित्रस्य पुत्रः', 'भवतः मित्रस्य मित्रम्', 'भवतः मित्रस्य सहोदरः' इत्येवं वदन्तः मत्समीपम् आगच्छन्ति ।

गिरीशः - तथा न श्रीमन् ! मम पिता भवतः बाल्यमित्रं ..... सहाध्यायी । समाने आसने उपवेशनम् आसीत् भवतोः । 'कर्मठरायः' इति तस्य नाम ।

देवीप्रसादः - कर्मठरायः ! कः सः ? कस्यां कक्ष्यायां सः मम सहाध्यायी आसीत् ?

गिरीशः - अष्टमकक्ष्यायाम् ।

देवीप्रसादः - अष्टमकक्ष्यायाम् अहं त्रीणि वर्षाणि आसम् । सः प्रथमे वर्षे, द्वितीये वर्षे, उत तृतीये वर्षे मम सहाध्यायी आसीत् ?

गिरीशः - तृतीये वर्षे ।

देवीप्रसादः - उन्नतः, कृष्णवर्णः, विशालनेत्रः .....

गिरीशः - आं, सः एव ।

देवीप्रसादः - आं स्मृतम् । तस्य पुत्रः वा भवान् ? बहु सन्तोषः । भवान् किं करोति ?

गिरीशः - अहं M.A. पठितवान् । सुवर्णपदकमपि प्राप्तवान् । इदानीं .....

देवीप्रसादः - उद्योगान्वेषणं करोति । एवं ननु ?

गिरीशः - आम् । एकः उद्योगः अस्ति । यदि भवन्तः एकं वचनं वदन्ति ... किञ्चित् 'इन्फ्लुयन्स्' कुर्वन्ति चेत् ..... लभ्यते एव ।

देवीप्रसादः - पश्यतु गिरीश, तदेकं न शक्यते । इदानीं काञ्चनं विना किमपि न सिध्यति । अहं सत्यं वदामि ।

गिरीशः - भवान् सत्यहरिश्चन्द्रः ।

देवीप्रसादः - तस्य वंशजः। यदि भवान् वित्तकोषे उद्योगम् इच्छति तर्हि पञ्चदशसहस्रं रूप्यकाणि दातव्यानि भवन्ति।
आरक्षकनिरीक्षकोद्योगः चेत् २५ सहस्रं रूप्यकाणि।

गिरीशः - तर्हि एवं करोतु।

देवीप्रसादः - किम् ?

गिरीशः - K.S.R.T.C. मध्ये निर्वाहकोद्योगः .....

देवीप्रसादः - तदर्थमपि १० सहस्रं रूप्यकाणि दातव्यानि भवन्ति।

गिरीशः - श्रीमन्, अहं निर्धनपुत्रः, निरुद्योगी .....

देवीप्रसादः - पश्यतु गिरीश, इदानीं कालः तादृशः अस्ति। गतसप्ताहे मम कार्यालये एकः सेवकः उद्योगित्वेन स्वीकृतः। तेनैव अष्टसहस्रं रूप्यकाणि दत्तानि। एवं स्थिते .....

गिरीशः - श्रीमन्, कृपया किञ्चित् .....

(दूरवाणीध्वनिः)

देवीप्रसादः - तिष्ठतु। दूरवाणी आगता। (दूरवाण्यां) हरिः ओं ... अहं देवीप्रसादः। किं ... ? मध्यकालीननिर्वाचनं वा ? कदा ... ? आगामिमासे एव वा ? अस्तु ... चिन्ता मास्तु ... । अस्माकमेव जयः भवति। ... अस्तु ... धन्यवादः।

देवीप्रसादः - पश्यतु गिरीश, भवतः एका शुभवार्ता।

गिरीशः - का वार्ता ?

देवीप्रसादः - इदानीं मध्यकालीनानिर्वाचनं घोषितम् अस्ति। भवान् एवं करोतु। अस्माकं पक्षस्य प्रचारकार्यं करोतु। भोजनादिकं मम गृहे एव करोतु। निर्वाचनानन्तरम् उद्योगविषये किमपि चिन्तयामः।

गिरीशः - तथैव अस्तु ।

देवीप्रसादः - तर्हि दीक्षां ददामि ?

गिरीशः - का दीक्षा ?

देवीप्रसादः - राजकीयदीक्षा ।

गिरीशः - राजकीयदीक्षा इति काचित् अस्ति वा ?

देवीप्रसादः - आम् । भवान् सिद्धः वा ?

गिरीशः - आम्, अहं तु सिद्धः ?

देवीप्रसादः - तर्हि दीक्षां ददामि । (शिरत्वं धारयति) (साभिनयम् उभौ अपि गच्छतः)

* * *

- ५ -

श्रृण्वन्तु भोः, श्रृण्वन्तु ऽऽऽ .....
भवताम् अमूल्यमतं - दुर्बुद्धिपक्षस्य कृते ।
भवताम् अभ्यर्थी - मण्डूकरायः ।
तस्य सङ्केतः - कपिसङ्केतः ।

श्रृण्वन्तु भोः श्रृण्वन्तु .....
भवताम् अमूल्यमतं - कूष्माण्डरायस्य कृते ।
तस्य पक्षः - निर्बुद्धिपक्षः ।
तस्य सङ्केतः - गर्दभसङ्केतः ।

* * *

इयम् आकाशवाणी । सम्प्रति वार्ताः श्रूयन्ताम् । ह्यः प्रवृत्ते निर्वाचने निर्बुद्धिपक्षस्य श्री कूष्माण्डरायः जितवान् अस्ति । ..... इति वार्ताः ।

(सर्वे अभिमानिनः उत्थाय जयघोषं कुर्वन्ति ।) जयतु जयतु कूष्माण्डरायः ..... (द्विवारं)

* * *

– ६ –

(कूष्माण्डरायः भाषणार्थं सिद्धः अस्ति ।)

देवीप्रसादः – इदानीम् अस्माकं नायकः श्री कूष्माण्डरायः एकम् अमूल्यं भाषणं करोति ।

कूष्माण्डरायः – प्रियबान्धवाः । भवतां सर्वेषां सहकारेण अहं जितवान् अस्मि । यद्यपि अहं मन्त्री भवितुं न इच्छामि, तथापि भवतां सेवां कर्तुं मन्त्री अस्मि । भवतां सर्वेषाम् अमूल्यसहकारेण शीघ्रमेव मुख्यमन्त्री अपि भविष्यामि । अनन्तरं सर्वाः समस्याः दूरीकरिष्यामि । दलितोद्धारं करिष्यामि । मार्गे सर्वत्र मधुशालाः स्थापयिष्यामि । चित्रमन्दिराणि स्थापयिष्यामि । तदा सुखस्य शान्तेः च नदी प्रसरिष्यति । अस्माकं राज्यं रामराज्यं करिष्यामि ।

* * *

– ७ –

(मन्त्री कूष्माण्डरायः उपविष्टः अस्ति । साहाय्यम् इच्छन्तौ अर्चकः तत्सहकारी च आगच्छतः ।)

अर्चकः – नमस्कारः श्रीमन् !

कूष्माण्डरायः – नमस्कारः ।

अर्चकः – आवां पार्श्वस्थात् शिवपुरग्रामतः आगतवन्तौ ।

सहकारी – अस्माकं ग्रामे कश्चन देवालयः अस्ति । सः जीर्णः अस्ति ।

कूष्माण्डरायः – एषः गतसर्वकारस्य दोषः ।

अर्चकः – तस्य देवालयस्य उद्धारः करणीयः इति अस्माकम् इच्छा ।

कूष्माण्डरायः – योग्यं कार्यम् । अवश्यं कुर्वन्तु ।

अर्चकः – तदर्थं किञ्चित् धनसाहाय्यम् ..... ।

कूष्माण्डरायः - धनसाहाय्यम् ? तत्तु सर्वथा न शक्यते ।
सर्वकारकोषे इदानीं धनम् एव नास्ति ।

अर्चकः - किञ्चित् वा साहाय्यम् .....

कूष्माण्डरायः - किं सर्वकारकोषे धनवृष्टिः भवति वा ? धनसाहाय्यं सर्वथा न शक्यते ।

अर्चकः - (सहकारिणा सह किञ्चित् समालोच्य) सिमेण्ट्प्राप्त्यर्थम् अनुमतिपत्रं दातुं शक्येत वा ?

कूष्माण्डरायः - सिमेण्ट्निमित्तं पर्मिट् ? सर्वथा न शक्यते एतदपि ।

अर्चकः - (पुनः सहकारिणा सह समालोच्य) अस्तु तर्हि । वयम् एव अस्मत्प्रदेशे धनं सङ्गृह्य जीर्णोद्धारकार्यं करिष्यामः । विग्रहस्य पुनःप्रतिष्ठापनदिने यदि भवन्तः उपस्थिताः स्युः तर्हि उचितं भवेत् ।

कूष्माण्डरायः - देवीप्रसाद !

देवीप्रसादः - (उपस्थाय) श्रीमन्, उपस्थितोऽस्मि ।

कूष्माण्डरायः - एते मां कार्यक्रमार्थम् आह्वयन्तः सन्ति ।

देवीप्रसादः - कदा कार्यक्रमः ?

अर्चकः - माघबहुलचतुर्दश्याम् उत्तमः मुहूर्तः अस्ति । तन्नाम इतः चतुर्णां मासानाम् अनन्तरं मार्च्मासे २७ दिनाङ्के ।

देवीप्रसादः - (कार्यक्रमपुस्तकं दृष्ट्वा) तस्मिन् दिने अवकाशः नास्ति एव । तद्दिने प्रसिद्धनट्याः हेममालिन्याः सम्माननकार्यक्रमः ।

कूष्माण्डरायः - तस्मिन् कार्यक्रमे अहम् एव अध्यक्षः । अतः तस्मिन् दिने उपस्थातुं न शक्नोमि । पुनः कदाचित् आगमिष्यामि ।

अर्चकः - अस्तु तावत् (निर्गच्छतः ।)

* * *

(कस्याश्चित् शालायाः प्रबन्धकसमित्याः अध्यक्षः कार्यदर्शी च प्रविशतः ।)

अध्यक्षः - नमस्कारः श्रीमन् !

कूष्माण्डरायः - नमस्कारः ।

कार्यदर्शी - आवां कुचेलपुरात् आगतौ । अस्माकं ग्रामे एका शाला निर्मातव्या इति अस्माकं सङ्कल्पः ।

कूष्माण्डरायः - विद्यादानं परं दानम् । अवश्यं करणीयं कार्यम् एतत् ।

अध्यक्षः - शालानिर्माणार्थं सर्वकारतः यदि अनुदानधनं दीयेत तर्हि महान् उपकारः स्यात् ।

कूष्माण्डरायः - गतसर्वकारेण सर्वं धनं व्ययितम् । इदानीं सर्वकारसमीपे धनम् एव नास्ति ।

अध्यकः - जनहितार्थं क्रियमाणं कार्यम् एतत् ।

कूष्माण्डरायः - तत् समीचीनम् । किन्तु सर्वे आगत्य 'धनं, धनं, धनम्' इति वदन्ति चेत् अहं कुतः वा आनयामि ? किं धनपत्रस्य मुद्रणं कुर्यां वा ? धनदानं सर्वथा न शक्यते ।

कार्यकर्शी - तर्हि ५,००० गोणीमितं सिमेण्ट् वा ..... ?

कूष्माण्डरायः - सिमेण्ट् ! मम द्वितीयपत्न्याः चतुर्थपुत्रस्य गृहस्य निर्माणार्थम् अहम् एव कष्टम् अनुभवन् अस्मि । एवं स्थिते सिमेण्ट् कुतः ?

अध्यकः - श्रीमन्, उदाराः भवन्तः .....

कूष्माण्डरायः - अस्तु, एतद्विषये एकं प्रार्थनापत्रं लिखित्वा यच्छन्तु । परिशीलयिष्यामः ।

अध्यकः - प्रार्थनापत्रं लिखित्वा आनीतम् एव अस्ति। स्वीकरोतु।
(दत्त्वा) किमपि करोतु कृपया।

कूष्माण्डरायः - अस्तु, योग्यां व्यवस्थां करिष्यामि।

अध्यक्षः कार्यदर्शी च - आवाम् आगच्छावः तावत्। (निर्गच्छतः।)

कूष्माण्डरायः - देवीप्रसाद! एतस्य पत्रस्य योग्यां व्यवस्थां करोतु।
(देवीप्रसादाय ददाति।)

देवीप्रसादः - अस्तु, करोमि। (पत्रम् अपठित्वा एव विदार्य
क्षिपति।)

* * *

- ९ -

(धनङ्गिलाचार्यः तिमिङ्गिलाचार्यः च प्रविशतः।)

तिमिङ्गिलाचार्यः - (अतिविनयं प्रदर्शयन्) नमस्काराः।
नमस्काराः। एषः स्वार्थसाधकसमितेः कार्यदर्शी धनङ्गिलाचार्यः।

धनङ्गिलाचार्यः - एषः स्वार्थसाधकसमितेः अध्यक्षः
तिमिङ्गिलाचार्यः।

कूष्माण्डरायः - भवतोः नाम एव सूचयति यत् मम आत्मीयौ
भवन्तौ इति। अपि कुशलं भवतोः?

तिमिङ्गिलाचार्यः - आम्, सर्वं भवतः दयया।

कूष्माण्डरायः - कः विशेषः?

तिमिङ्गिलाचार्यः - भवान् निर्वाचने जितवान् इति वयं सन्तुष्टाः।

कूष्माण्डरायः - अहम् अपि सन्तुष्टः।

तिमिङ्गिलाचार्यः - अस्माकं ग्रामे सर्वे अपि सन्तुष्टाः।

कूष्माण्डरायः - मम पत्नीपुत्रादयः अपि सन्तुष्टाः।

ध.आ. - भवतः सम्माननं करणीयम् इति वयं निश्चितवन्तः।

कूष्माण्डरायः - सम्माननम् ! मम सम्माननम् !! कदा क्रियते ? देवीप्रसाद ! आगच्छतु ।

देवीप्रसादः - (धावन् आगत्य) उपस्थितोऽस्मि ।

कूष्माण्डरायः - एतैः मम सम्माननं क्रियते । कार्यक्रमपुस्तके लिखतु ।

देवीप्रसादः - कदा सम्माननम् ?

ध.आ. - आगामि-पञ्चमदिनाङ्के ।

देवीप्रसादः - (कार्यक्रमपुस्तकं दृष्ट्वा) किन्तु, श्रीमन् । तस्मिन् दिने भवता कस्याश्चित् शालायाः उद्घाटनम् अङ्गीकृतम् अस्ति ।

कूष्माण्डरायः - तत् व्याक्षिपतु ।

देवीप्रसादः - ते अस्माकं पक्षस्य हितं कुर्वन्ति ।

कूष्माण्डरायः - एते अस्माकं हितं कुर्वन्ति । अतः एतम् एव कार्यक्रमं पुस्तके लिखतु ।

देवीप्रसादः - अस्तु, सम्माननं कस्मिन् समये ?

ध.आ. - सायङ्काले पञ्चवादने ।

कूष्माण्डरायः - अस्तु, वयं चतुर्वादने एव आगमिष्यामः । भवतां ग्रामे सर्वे कुशलिनः वा ?

ति.आ. - नैव श्रीमन् । सर्वे चिन्ताक्रान्ताः सन्ति ।

कूष्माण्डरायः - किमर्थम् ?

ति.आ. - अस्माकं ग्रामें ५,००० जनाः सन्ति ।

ध.आ. - परन्तु एकमपि चित्रमन्दिरं नस्ति ।

देवीप्रसादः - पश्यन्तु भोः, सज्जनाः । तस्मिन् ग्रामे ५,००० जनाः सन्ति । किन्तु एकमपि चलनचित्रमन्दिरं नास्ति । अहो ! कीदृशी दुर्गतिः अस्माकं देशस्य !!

कूष्माण्डरायः - बहु अन्याय्यम् । तदर्थं किं कुर्मः ?

ति.आ. - वयमेव चित्रमन्दिरस्य निर्माणं कुर्मः इति चिन्तितवन्तः ।

कूष्माण्डरायः - एवं वा ? बहु समीचीनम् । निर्माणं कुर्वन्तु । अहमेव उद्घाटनार्थम् आगमिष्यामि ।

ध.आ. - अस्तु, तथैव कुर्मः । परन्तु इदानीम् अस्माकं पञ्चसहस्रगोणीपरिमितं सिमेण्ट् आवश्यकम् आसीत् ।

कूष्माण्डरायः - तावदेव वा ? इतोऽपि अधिकम् आवश्यकं भवेत् । यथेष्टं स्वीकरोतु ।

तिमिङ्गिलाचार्यः - किन्तु पर्मिट् न लभ्यते किल ?

कूष्माण्डरायः - अनुमतिपत्रविषये भवतां का चिन्ता ? मन्त्री अहं वदामि किल ? यावत् आवश्यकं तावत् मम गोडौन्तः नयन्तु ।

ति.आ. - बहु बहु धन्यवादाः । तर्हि वयं गच्छामः ।

कूष्माण्डरायः - अस्तु, वयं सम्माननदिने पुनः मिलामः ।

देवीप्रसाद ! व्यवस्थाविषये एतान् सर्वं वदतु । व्यवस्थार्थम् एतस्य धनस्य उपयोगं कुर्वन्तु एते । (धनं देवीप्रसादाय ददाति । निर्गच्छति च ।) देवीप्रसादः झटिति ततः किञ्चित् स्वकोषे स्थापयति । अवशिष्टं हस्तेन गृहीत्वा)

भोः, पश्यन्तु, सर्वा व्यवस्था समीचीना भवेत् । फोटो, माला, मैक् इत्यादीनां व्यवस्था सम्यक् भवेत् । सभायां बहवः जनाः भवेयुः । तदर्थं समीपस्थेभ्यः ग्रामेभ्यः जनान् भारवाहकयानैः आनयन्तु । धनविषये काऽपि चिन्ता मास्तु । एतत् धनं स्वीकुर्वन्तु । (धनं ददाति ।) अन्यच्च तस्मिन् दिने ममापि एका माला ..... । मदर्थं माला न विस्मर्तव्या ..... ।

ति.आ. - अस्तु, अस्तु । सर्वं कुर्मः । आगच्छामः ।

* * *

('अद्य सायङ्काले कूष्माण्डरायस्य सम्माननम् अस्ति। सर्वे आगच्छन्तु' इति घोषणा)

* * *

(कूष्माण्डरायः उपविष्टः भवति। गिरीशः आगच्छति।)

गिरीशः - नमस्कारः।

मन्त्री - आं, किं भोः ?

गिरीशः - भवन्तः मम कृते एकम् आश्वासनं दत्तवन्तः आसन्।

मन्त्री - किमिति ?

गिरीशः - निर्वाचनानन्तरं भवतः कृते एकम् उद्योगं ददामि इति।

मन्त्री - वयं राजकीयपुरुषाः तादृशानि बहूनि आश्वासनानि दद्मः । तत्र किमस्ति ?

गिरीशः - मह्यम् एकं S.I. उद्योगं ददामि इति भवता उक्तम् आसीत्।

मन्त्री - परन्तु तत् इदानीं नास्ति। अस्माकं विरोधी आसीत् किल, मण्डूकरायः ? सः पक्षान्तरं कृत्वा अस्माकं पक्षम् आगतवान्। तस्य पुत्र्याः पत्युः कृते तम् उद्योगं दत्तवान् अहम्।

गिरीशः - तर्हि अन्यम् उद्योगं ददातु ।

मन्त्री - कोऽपि उद्योगः नास्ति । इदानीं मया गन्तव्यम् । मम इदानीं सम्माननकार्यक्रमः अस्ति ।

गिरीशः - परन्तु मम का गतिः ?

मन्त्री - भवतः भगवान् एव गतिः । अथवा अधोगतिः । गच्छतु भोः । (तं पादेन प्रहृत्य अग्रे गच्छति ।) (गिरीशः क्रोधेन उत्थिष्ठति ।)

गिरीशः - भोः कूष्माण्डराय ! पश्यतु । भवन्तं पाठयामि । शृण्वतु भोः ! जनाः शृण्वन्तु ।

गीतम् - शृण्वन्तु शृण्वन्तु
सर्वेऽपि शृण्वन्तु
लोकस्य रीतिरियम्
ज्येष्ठानां नीतिरियम्
सर्वेऽपि मन्त्रिणः
भाषणे चतुराः
कार्ये तु अलसाः
चौर्ये तु निपुणाः ॥ शृण्वन्तु शृण्वन्तु ।
(जनाः तस्य पृष्ठतः आगच्छन्ति ।)

* * *

(मन्त्री भाषणार्थं संनद्धः अस्ति । धनङ्गिलाचार्यः हारम् अर्पयति । राङ्कवं चापि अर्पयति । मन्त्री भाषणं करोति ।)

मन्त्री - भोः, भोः, बान्धवाः, भ्रातरः, भगिन्यः, ज्येष्ठाः ..... अहं सम्माननं न इच्छामि । तथापि भवतां सन्तोषार्थम् एतत् अङ्गीकृतवान् । इदानीं मम अधिकारावधौ त्रयः मासाः अतीताः । इदानीं देशे काऽपि समस्या नास्ति । निरुद्योगसमस्या नास्ति । सर्वत्र सुभिक्षः अस्ति । वस्तूनां मूल्यं बहु न्यूनम् अस्ति । सर्वं

बहु समीचीनम् अस्ति। (जनाः 'असत्यम्' 'असत्यम्' इति वदन्ति।) कुत्रापि भ्रष्टाचारः एव नास्ति।

गिरीशः - सर्वम् असत्यम्। रे, वराक (सर्वे ताडनम् अभिनयन्ति। मन्त्री भयम् अभिनयति।)

गिरीशः - भोः, भोः जनाः, पश्यन्तु। एतद्दृशाः नयवञ्चकाः सर्वत्र सन्ति। एते अस्माभिः एव पोषिताः। अस्माकम् एव रक्तं पिबन्ति। ग्रामे, ग्रामे, नगरे नगरे एतादृशाः सन्ति। एतादृशानां विषये जागरूकाः भवन्तु।

सर्वे - ''जागरूको भव।''

* * * * *

* * *

*